॥ શ્રી પરમાત્મને નમઃ ॥

# શોભનસ્તુતિ

શ્રીમન્ શોભન મુનિ આદિ વિરચિત સંસ્કૃત સ્તુતિ ચૈત્ય-વંદન સ્તોત્ર તથા ગુજરાતી અક્ષયનિધિતપનો વિધિ નવ-કારવાળીની સઝાય તથા શ્રી અવંતીસુકુમાળની તેરઢાળની સઝાઓ તથા મણિચંદ્રકૃત સઝાયો તથા નવકારશી આદિ પચકખાણ પારવાનો કોઠો તથા ગહુંલી વિગેરે.

---

શ્રીમાન પરમપુજય મુનિમહારાજ શ્રી મોહનલાલજીના શિષ્ય પન્યાસજી શ્રી હરખમુનિજીના શિષ્યો પદ્મમુનિજી તથા પન્યાસ શ્રીકનકમુનિજી ગણીના સદુપદેશથી.

છપાવી પ્રસીધ્ધકરનાર

ઝવેરી પ્રેમચંદ કલ્યાણચંદ તથા શા૦ લાલચંદ હેમચંદ સુખડીયા

તરફથી સંઘને ભેટ ઠે૦ ગોપીપુરા—સુરત.

વિક્રમ સંવત ૧૯૮૨ નો મહાસુદી ૧ વીર સં૦ ૨[illegible]

આવૃતી ૩ જી પ્રત ૨[illegible]

કિંમત અમુલ્ય ( ભેટ )

॥ શ્રી પરમાત્મને નમઃ ॥

# શોભનસ્તુતિ

શ્રીમત્ શોભન મુનિ આદિ વિરચિત સંસ્કૃત સ્તુતિ ચૈત્યવંદન સ્તોત્ર તથા ગુજરાતી અક્ષયનિધિતપનો વિધિ નવકારવાળીની સઝાય તથા શ્રી અવતીસુકુમાળની તેરઢાળની સઝાઓ તથા મણિચંદકૃત સઝાયો તથા નવકારશી આદિ પચકખાણ પારવાનો કોઠો તથા ગહુંલી વિગેરે.

---

શ્રીમાન પરમપુજય મુનિમહારાજ શ્રી મોહનલાલજીના શિષ્ય પન્યાસજી શ્રી હરખમુનિજીના શિષ્યો પદ્મમુનિજી તથા પન્યાસ શ્રીકનકમુનિજી ગણીના સદુપદેશથી.

છપાવી પ્રસીધ્ધકરનાર

ઝવેરી પ્રેમચંદ કલ્યાણચદ તથા શા૦ લાલચદ હેમચદ સુખડીયા તરફથી સંઘને ભેટ ઠે૦ ગોપીપુરા—સુરત.

વિક્રમ સંવત ૧૯૮૨ ના મહાસુદી ૧ વીર સં૦ ૨૪૫૨

અવૃતી ૩ જી પ્રત ૨૦૦૦

કિમત અમુલ્ય ( ભેટ )



સુરત બગાનપુરીભાગળ પગથીઆ શેરીના નાકે આવેલા
ધી લક્ષ્મી પ્રી૦ પ્રેસમાં હીરાલાલ ચકુલાલે છાપી.

—તથા—

મરાઠીનાં કારમો અમદાવાદ ઘી કાંટા પર આવેલા
વસત પ્રીન્ટીંગ પ્રેસમાં છાપ્યા.



# પ્રસ્તાવના



પરમપૂજ્ય શ્રીમાન મોહનલાલજી મહારાજનાશિષ્યપન્યાસજી શ્રી હરખમુંનીજીના શિષ્યો મુંનિશ્રી પદ્મમુનિજી તથા પં૦ ન્યાસજી શ્રી કનક મુનિજી ગણિનું ચોમાસુ સુરતમાં સં૦ ૧૯૮૧માં થયું. તે વખતે મુનિશ્રીના ઉપદેશામૃત વચનોથી સમ્યકત્વને દૃઢ કરવાવાળી પરમપૂજ્ય વિદ્વત્ શિરોમણિ શ્રીમત શોભનમૂનિ વિરચિત સ્તુતિઓ છપાવવા વિચાર થયો, અને આ કાર્ય કરવાની ભલામણ થઇ, તેથી આ પુસ્તક અમોએ છપાવેલ છે. તેમાં દૃષ્ટિદોષથી અથવા પ્રેસની દોષથી જે કંઇ અધિક ન્યુન કે અશુદ્ધ રહ્યું હોય અથવા જિનાજ્ઞા વિરૂદ્ધ છપાઇ ગયું હોય તેનો મિચ્છામિદુક્કડં દઇ અત્રે વીરમુછું,

અને વાચકોને ભલામણ કરવામાં આવે છે કે તે અશુદ્ધતાને સુધારીને વાંચવું,

અને આપુસ્તકછપાવવામાં અમે નીચે મુજબ મદદ આપીછે

૧૫૧) એકશો એકાવન પ્રેમચંદ કલ્યાણચંદ ઝવેરી.

૧૦૧) એકસોએક લાલભાઇ હેમચદ સુખડીઆ. તરફથી શ્રી સંઘને ભેટ-( ઠે૦ ગોપીપૂરા સુરત

વિક્રમ સ૦ ૧૯૮૨ના મહાસુદી ૧ શ્રી વીર સં૦ ૨૪૫૨

આવૃત્તિ ૩ જી પ્રત ૨૦૦૦

# અનુક્રમણીકા




૧-૧૪ શ્રીશોભનમુનિ વિરચિત સંસ્કૃત સ્તુતિઓ તથા ચૈત્યવંદનો સ્તોત્ર વિગેરે.

ગુજરાતી—

૧-૧૬ નવકારવાળીની સજ્ઝાય; અવંતી સુકુમાળનાં તેર ઢાળીયાં.

૧૭-૩૨- નવધાક્રિયાવર્ણન ( મણિચંદ્રજીકૃત સજ્ઝાયો ) નવકારશી આદિ પચ્ચખ્ખાણ પારવાનુ યંત્ર.

૩૩-૪૨- અક્ષયનિધિતપની વીધી

૪૨-૫૨- ગહુંલીઓ વિગેરે.






શ્રીમાન્ મોહનલાલજી મહારાજના પ્રશિષ્ય

શ્રી૦ પદ્મ મુનિજી મહારાજ.

| | |
|---|---|
| જ.મ સ-૧૯૨૨ ના | દીક્ષા--સ ૧૯૫૬ ના |
| જેઠ વદ ૩ | પોષ વદ ૬ |

ॐ श्रीवीतरागाय नमः

# अथ त्रैलोक्यप्रकाशाख्यं जिन-चैत्यवन्दनम् ।

## अथवा चैत्यवन्दनचतुर्विंशतिका ।

शार्दूलविक्रीडितं छन्दः ।

सद्भक्त्या नतमौलिनिर्जरवरभ्राजिष्णुमौलिप्रभा-संमिश्रारुण-
दीप्तिशोभिचरणाम्भोजद्वयः सर्वदा ।
सर्वज्ञः पुरुषोत्तमः सुचरितो धर्मार्थिनां प्राणिनाम्,
भूयाद्भूरिविभूतये मुनिपतिः श्रीनाभिसूनुर्जिनः ॥१॥

सद्बोधोपचिताः सदैव दधता प्रौढप्रतापश्रियो
येनाज्ञानतमोवितानमखिलं विक्षिप्तमन्तःक्षणम् ।
श्रीशत्रुञ्जयपूर्वशैलशिखरं भास्वानिवोद्भासयन्,
भव्याम्भोजहितः स एष जयतु श्रीमारुदेवः प्रभुः ॥२॥

यो विज्ञानमयो जगत्त्रयगुरुर्यं सर्वलोकाः श्रिताः,
सिद्धिर्येन वृता समस्तजनता यस्मै नतिं तन्वते ।
यस्मान्मोहमतिर्गता मतिभृतां यस्यैव सेव्यं वचो,
यस्मिन् विश्वगुणास्तमेव सुतरां वन्दे युगादीश्वरम् ॥३

## अथ श्रीअजितप्रभुस्तुतिप्रारम्भः

( मालिनी छन्दः । )

सकलसुखसमृद्धिर्यस्य पादारविन्दे,
विलसति गुणरक्ता भक्तराजीव नित्यम् ।
त्रिभुवनजनमान्यः शान्तमुद्राभिरामः,
स जयति जिनराजस्तुङ्गतारङ्गतीर्थे ॥ १ ॥
प्रभवति किल भव्यो यस्य निर्वर्णनेन,
व्यपगतदुरितौघः प्राप्तमोदप्रपञ्चः ।
निजबलजितरागद्वेषविद्वेषिवर्गं,
तमजितवरगोत्रं तीर्थनाथं नमामि ॥ २ ॥
नरपतिजितशत्रोर्वंशरत्नाकरेन्दुः,
सुरपतियतिमुख्यैर्भक्तिदक्षैः समर्च्यः ।
दिनपतिरिव लोकेऽपास्तमोहान्धकारो,
जिनपतिरजितेशः पातु मां पुण्यमूर्तिः ॥ ३ ॥

## अथ श्रीसंभवजिनस्तुतिप्रारम्भः ॥ ३ ॥

( स्रग्धरा छन्दः । )

यद्भक्त्यासक्तचित्ताः प्रचुरतरभवभ्रान्तिमुक्ता मनुष्याः, संजाताः साधुभावोल्लसितनिजगुणान्वेषिणः सद्य एव । स श्रीमान् सम्भवेशः प्रशमरसमयो विश्वविश्वोपकर्ता, सद्भर्ता दिव्यदीप्तिः परमपदकृते सेव्यतां भव्यलोकाः ॥१॥ शुक्लध्यानोदकेनोज्ज्वलमतिशयतस्वच्छभावाद्भुतेन, स्वस्मादाहृत्य वृत्तं शिवपद-

निगमं कर्मपङ्कप्रपञ्चम् । नीरन्ध्रं दूरयित्वा प्रकृतिमुपगतो निर्विकल्पस्वरूपः, सेव्यस्तार्क्ष्यध्वजोऽसौ जगति जिनपतिर्वीतरागः सदैव ॥ २ ॥ वार्धौ विद्योतिरत्नप्रकर इव परिभ्राजते सर्वकाले, यस्मिन्निःशेषदोषव्यपगमविशदे श्रीजितारेस्तनूजे । दुष्प्रापो दुष्टसत्त्वैः स्फुटगुणनिकरः शुद्धबुद्धिक्षमादिः, कल्याण श्रीनिवासः स भवति वदताभ्यर्चनीयो न केषाम्॥ ३ ॥

## अथ श्रीअभिनन्दनस्तुतिप्रारम्भः ॥ ४ ॥

(द्रुतविलम्बितं छन्दः ।

विशदशारदसोमसमाननः, कमलकोमलचारुविलोचनः ।
शुचिगुणः सुतरामभिनन्दनो, जयतु निर्मलताश्रितभूयनः ॥१॥
जगति कान्तहरीश्वरलाञ्छित-क्रमसरोरुह भूरिकृपानिधे ।
मम समीहितसिद्धिविधायकं, त्वदपरं कमपीह न तर्कये ॥२॥
प्रवरसंवर संवरभूपते-स्तनय नीतिविचक्षण ते पदम् ।
शरणमस्तु जिनेश निरन्तरं, रुचिरभक्तिसुयुक्तिभृतो मम ॥३॥

## अथ सुमतिजिनस्तुतिप्रारम्भः ॥ ५ ॥

( उपेन्द्रवज्रा छन्दः ।

सुवर्णवर्णो हरिणा सवर्णो, मनोवनं मे सुमतिर्बलीयान् ।
गतस्ततो दुष्टकुदृष्टिराग-द्विपेन्द्र नैव स्थितिरत्र कार्या ॥ १ ॥
जिनेश्वरो मेघनरेन्द्रसूनु-र्घनोपमो गर्जति मानसे मे ।
अहो गुरुद्वेषहुताशनत्वा-मसौ शमं नेष्यति सद्य एव ॥ २ ॥

इतः सुदूरं व्रज दुष्टबुद्धे, समं दुरात्मीयपरिच्छदेन ।
सुबुद्धिभर्ता सुमतिर्जिनेशो, मनोरमः स्वान्तमितोमदीयम् ॥३॥

## अथ श्रीपद्मप्रभजिनस्तुति प्रारम्भः ॥६॥

( भुजङ्गप्रयातं छन्दः । )

उदारप्रभामण्डलैर्भासमानः, कृतात्यन्तदुर्दान्तदोषापमानः।
सुसीमाङ्गजः श्रीपतिर्देवदेवः, सदा मे मुदाभ्यर्चनीयस्त्वमेव॥१॥
यदीयं मनःपङ्कजं नित्यमेव, त्वयालंकृतं ध्येयरूपेण देव ।
प्रधानस्वरूपं तमेवातिपुण्यं, जगन्नाथ जानामि लोके सुधन्यम्॥२॥
अतोऽधीश पद्मप्रभानन्दधाम, स्मरामि प्रकामं तवैवाङ्ग नाम।
मनोवाञ्छितार्थप्रदं योगिगम्यं,
यथा चक्रवाको रवेर्धाम रम्यम् ॥ ३ ॥

## अथ श्रीसुपार्श्वजिनस्तुतिप्रारम्भः ॥ ७ ॥

( तोटकं छन्दः )

जयवन्तमनन्तगुणैर्निभृतं, पृथिवीसुतमद्भुतरूपभृतम् ।
निजवीर्यविनिर्जितकर्मबलं, सुरकोटिसमाश्रितपत्कमलम्॥१॥
निरुपाधिकनिर्मलसौख्यनिधिं, परिवर्जितविश्वदुरन्तविधिम् ।
भववारिनिधेः परपारमितं, परमोज्ज्वलचेतनयोन्मिलितम्॥२॥
कलधौतसुवर्णशरीरधरं, शुभपार्श्वसुपार्श्वजिनप्रवरम् ।
विनयावनतः प्रणमामि सदा, हृदयोद्भवभूरितरप्रमुदा ॥३॥

## अथ श्रीचन्द्रप्रभजिनस्तुतिः ॥८॥

( वंशस्थं छन्दः । )

अनन्तकान्तिप्रकरेण चारुणा, कलाधिपेनाश्रितमात्मसाम्यतः ।
जिनेन्द्र चन्द्रप्रभदेवमुत्तमं, भवन्तमेवात्महितं विभावये ॥ १ ॥
उदारचारित्रनिधे जगत्प्रभो, तवाननाम्भोजविलोकनेन मे ।
व्यथा समस्तास्तमितोदितं सुखं, यथा तमिस्रा दिनमर्कतेजसा॥२॥
सदैव संसेवनतत्परे जने, भवन्ति सर्वेऽपि सुराः सुदृष्टयः ।
समग्रलोके समचित्तवृत्तिना, त्वयैव संजातमतो नमोऽस्तुते॥३॥

## अथ श्रीसुविधिजिनस्तुतिप्रारम्भः ॥९॥

( वसन्ततिलका छन्दः । )

विश्वाभिवन्द्य मकराङ्कितपादपद्म,
सुग्रीवजात जिनपुङ्गव शान्तिसद्म ।
भव्यात्मतारणपरोत्तमयानपात्र,
मां तारयस्व भववारिनिधेर्विरूपात् ॥ १ ॥
निःशेषदोषविगमोद्भवमोक्षमार्गं,
भव्याः श्रयन्ति भवदाश्रयतो मुनीन्द्र ।
संसेवितः सुरमणिर्बहुधा जनानां,
किं नाम नो भवति कामितसिद्धिकारी ॥ २ ॥
विज्ञ कृपारसनिधिं सुविधे स्वयंभूर्मत्वा,
भवन्तमिति विज्ञपयामि तावत् ।

देवाधिदेव तव दर्शनवल्लभोऽहं,
शश्वद्भवामि भुवनेश तथा विधेहि ॥ ३ ॥

## अथ श्रीशीतलजिनस्तुतिप्रारम्भः ॥ १० ॥

( शार्दूलविक्रीडितं छन्दः । )

कल्याणाङ्कुरवर्धने जलधरं सर्वाङ्गिसम्पत्करं,
विश्वव्यापियशःकलापकलितं कैवल्यलीलाश्रितम् ।
नन्दाकुक्षिसमुद्भवं दृढरथक्षोणीपतेर्नन्दनं,
श्रीमत्सूरतबन्दिरे जिनवरं वन्दे प्रभुं शीतलम् ॥१॥
विश्वज्ञानविशुद्धसिद्धिपदवीहेतुप्रबोधं दध-
द्भव्यानां वरभक्तिरक्तमनसां चेतःसमुल्लासयन् ।
नित्यानन्दमयः प्रसिद्धसमयः सद्भूतसौख्याश्रयो,
दुष्टानिष्टतमःप्रणाशतरणिर्जीयाज्जिनः शीतलः ॥२॥
सद्भक्त्या त्रिदशेश्वरैः कृतनुतिर्भास्वद्गुणालंकृतिः,
सत्कल्याणसमग्रुतिः शुभमतिः कल्याणकृत्सङ्गतिः ।
श्रीवत्साङ्कसमन्वितस्त्रिभुवनत्राणे गृहीतव्रतो,
भूयाद्भक्तिमतां सदैव वरदः श्रीशीतलस्तीर्थकृत् ॥ ३ ॥

## अथ श्रीश्रेयांसजिनस्तुति प्रारम्भः ॥ ११ ॥

( हरिणी छन्दः । )

चिरपरिचिता गाढव्याप्ता सुबुद्धिपराङ्मुखी,
निजबलपरिस्फूर्त्योदग्रा समग्रतया मम ।

व्यपगतवती दूरं दुष्टा स्वनिष्ठकुदृष्टिता,
अपचितसहाः सद्यो भूत्वा यदीयसुदृष्टितः ॥ १ ॥

निरुपमसुखश्रेणीहेतुर्निराकृतदुर्दशा,
शुचितरगुणग्रामावासा निसर्गमहोज्ज्वला।
हृदयकमले प्रादुर्भूता सुतत्त्वरुचिर्मम,
विदलितभवभ्रान्तिर्यस्याप्यजस्रमनुस्मृतेः ॥ २ ॥

उपकृतिमतिदाने दक्षो निरस्तजगद्व्यथः,
समुचितकृतिर्विज्ञानांशुप्रकाशितसत्पथः,
नृपगणगुरोर्विष्णोर्वंशे प्रभाकरसन्निभः।
स भवतु मम श्रेयांसो नः प्रबोधसमृद्धये ॥ ३ ॥

## अथ श्रीवासुपूज्यजिनस्तुतिप्रारम्भः ॥१२॥

( रथोद्धता छन्दः । )

पूर्णचन्द्रकमनीयदीधितिभ्राजमानसुखमद्भुतश्रियम् ।
शान्तदृष्टिमभिरामचेष्टितं, शिष्टजन्तुपरिवेष्टितं परम् ॥ १ ॥
नष्टदुष्टमतिभिर्यमीश्वरं, संस्मरद्भिरिह भूरिभिर्नृभिः ।
क्षीणमोहसमयादनन्तरा, प्रापि सत्यपरमात्मरूपता ॥ २ ॥
पार्थिवेशवसुपूज्यवेश्मनि, प्राप्तपुण्यजनुषं जगत्प्रभुम् ।
वासुपूज्यपरमेष्ठिनं सदा, के स्मरति न हितं विपश्चितः ॥३॥

( त्रिभिः सण्टङ्कः । )

## अथ श्रीविमलजिनस्तुतिप्रारम्भः ॥ १३ ॥

( मन्दक्रान्ता छन्दः । )

संसारेऽस्मिन्महति महिमामेयमानन्दिरूपं,
त्वां सर्वज्ञं सकलसुकृतिश्रेणिसंसेव्यमानम् ।
दृष्ट्वा सम्यग्विमलसदसज्ज्ञानधाम प्रधानं,
संप्राप्तोऽहं प्रशमसुखदां सम्भृतानन्दवीचिम् ॥१॥
ये तु स्वामिन् कुमतिमपिहितस्फारसद्बोधमूढाः,
सौम्याकारां प्रतिकृतिमपि प्रेक्ष्य ते विश्वपूज्याम् ।
द्वेषोद्भूतैः कलुषितमनोवृत्तयः स्युः प्रकामं,
मन्ये तेषां गतशुभदृशां का गतिर्भाविनीति ॥ २ ॥
श्यामाम्नो प्रतिदिनमनुस्मृत्य विज्ञानिवाक्यं,
हित्वाऽनार्यं कुमतिवचनं ये भुवि प्राणभाजः ।
पूर्णानन्दोल्लसितहृदयास्त्वां समाराधयन्ति,
श्लाघ्याचाराः प्रकृतिसुभगाः सन्ति धन्यास्त एव ॥३॥

## अथ श्रीअनन्तजिनस्तुतिप्रारम्भः ॥ १४ ॥

( स्रग्विणी छन्दः । )

यस्य भव्यात्मनो दिव्यचेतोगृहे, सर्वदानन्तचिन्तामणिर्द्योतते ।
यान्ति दूरे स्वतस्तस्य दुष्टापदो, विश्वविज्ञानवित्तं भवेदक्षयम्१
यस्तु सर्वज्ञरूपं स्वरूपस्थितं, वीक्ष्य सद्भावतः सिंहसेनात्मजम् ।
अद्भुतामोदसन्दोहसम्पूरितो,मन्यते धन्यमात्मीयनेत्रद्वयम् ॥२।

सोऽपवर्गानुगामिस्वभावोज्ज्वलां,
व्यूढमिथ्यात्वविद्रावणे तत्पराम्।
बन्धुरात्मानुभूतिप्रकाशोद्यतां, शुद्धसम्यक्त्वसम्पत्तिमालम्बते॥३॥

## अथ श्रीधर्मनाथजिनस्तुतिप्रारम्भः ॥ १५ ॥

( क्रामक्रीडा छन्दः । )

भास्वज्ज्ञानं शुद्धात्मानं धर्मेशानं सद्ध्यानं,
शक्त्या युक्तं दोषोन्मुक्तं तत्त्वासक्तं सद्भक्तम्।
शश्वच्छान्तं कीर्त्या कान्तं ध्वस्तध्वान्तं विश्रामं,
क्षिप्तावेशं सत्यादेशं श्रीधर्मेशं वन्दध्वम् ॥ १ ॥
निःशेषार्थप्रादुष्कर्ता सिद्धेर्भर्ता सन्धर्ता,
दुर्भावानां दूरे हर्ता दीनोद्धर्ता संस्मर्ता।
सद्भक्तेभ्यो मुक्तेर्दाता विश्वत्राता निर्माता,
स्तुत्यो भक्त्या वाचोयुक्त्या चेतोवृत्त्या ध्येयात्मा ॥२॥
सम्यग्दृग्भिः साक्षाद्दृष्टो मोहास्पृष्टो नाकृष्टः,
स्रोतोग्रामैः संपज्ज्येष्ठः साधुश्रेष्ठः सत्प्रेष्ठः।
श्रद्धायुक्तस्वान्तैर्जुष्टो नित्यं तुष्टो निर्दुष्ट-
स्त्याज्यो नैव श्रीवज्राङ्कोनष्टातङ्को निःशङ्कः ॥ ३ ॥

## अथ श्रीशान्तिनाथजिनस्तुतिप्रारम्भः ॥ १६ ॥

( द्रुतविलम्बितं छन्दः ।

विपुलनिर्मलकीर्तिभरान्वितो, जयति निर्जरनाथनमस्कृतः।
लघुविनिर्जितमोहधराधिपो,जगति यः प्रभुशान्तिजिनाधिपः?

विहितशान्तसुधारसमज्जनं, निखिलदुर्जयदोषविवर्जितम् ।
परमपुण्यवतां भजनीयतां, गतमनन्तगुणैः सहितं सताम् ॥२॥
तमचिरात्मजमीशमधीश्वरं, भविकपद्मविबोधदिनेश्वरम् ।
महिमधाम भजामि जगत्त्रये, वरमनुत्तरसिद्धिसमृद्धये ॥ ३ ॥

## अथ श्रीकुन्थुनाथजिनस्तुतिः ।

गीतपद्धतिश्छन्दः ।

जय जय कुन्थुजिनोत्तम सत्तमतत्त्वनिधान,
धर्मिजनोज्ज्वलमानसमानसहंसमान ।
ज्ञानाच्छादकमुख्यमहोद्धतकर्मविमुक्त,
विषमविषयपरिभोगविरक्त शुभाशययुक्त ॥ १ ॥
जय जय विश्वजनीन मुनिव्रजमान्य विशुद्ध,
चेतन चारुचरित्रपवित्रित लोकविबुद्ध ।
निरुपममेरुमहीधरधीर निरन्तरमेव,
गर्वविवर्जितसर्वसुपर्वविनिर्मितसेव ॥ २ ॥
जय जय सूरनरेश्वरचन्दनकल्प,
जिनेश विश्वविभावविनाशक वीतविकल्प ।
निर्मलकेवलबोधविलोकितलोकालोक,
प्रादुर्भूतमहोदयनिर्वृति नित्यविशोक ॥ ३ ॥

## अथ श्रीअरनाथजिनस्तुतिप्रारम्भः ।

( रामगिरिरागेण गीयते )

दिव्यगुणधारकं भव्यजनतारकं,
दुरितमतिवारकं सुकृतिकान्तम् ।

जितविषमसायकं सर्वसुखदायकं,
जगति जिननायकं परमशान्तम् ॥ १ ॥
स्वगुणपर्यायसंमीलितं नौमि तं,
विगतपरभावपरिणतिमखण्डम् ।
सर्वसंयोगविस्तारपारंगतं,
प्राप्तपरमात्मरूपं प्रचण्डम् ॥ दि० ॥ २ ॥
साधुदर्शनव्रतं भाविकैः प्रस्तुतं,
प्रातिहार्याष्टकोद्भासमानम् ।
सततमुक्तिप्रदं सर्वदा पूजितं,
शिवमहीसार्वभौमप्रधानम् ॥ दि० ॥ ३ ॥
त्रिभिर्विशेषकम् ।

## अथ श्रीमल्लिजिनस्तुतिप्रारम्भः ।

( गेयपद्धतिरागः )

कुम्भसमुद्भव सम्मदाकर
गुणवर हे । मल्लिजिनोत्तम देव,
जय जय विश्वपते ॥ १ ॥
कृत्याकृत्यविवेकिता जिन समुचिता
हे । त्वयि जागर्ति जिनेश जय जय विश्वपते २
नित्यानन्दप्रकाशिका भ्रमनाशिका
हे । तव शुभदृष्टि रतीश जय जय विश्वपते ॥ ३ ॥
शुद्धिनिबन्धनसन्निधे सद्गुणनिधे

हे। वर्जितसर्वविकार जय जय विश्वपते ॥ ४ ॥
निजनिरुपाधिकसम्पदा शोभित सदा।
हे निर्मलधर्मधुरीण जय जय विश्वपते ॥ ५ ॥

## अथ श्रीमुनिसुव्रतजिनस्तुतिप्रारम्भः ॥

( अन्यगेयपद्धतिराग: )

उत्तमचेतन धर्मसमृद्ध जगत्पते,
नित्याऽनित्यपदार्थनिचयविलसन्मते।
निजविक्रमजितमोहमहोद्भटभूपते,
श्रीपद्मातनुजात सुजातहरिद्युते ॥ १ ॥
श्रीमुनिसुव्रत सुव्रतदेशक सज्जनाः,
कृतसद्गुरुशुभवाक्यसुधारसमज्जनाः।
ये प्रणमन्ति भवन्तमनन्तसुखाश्रितं,
केवलमुज्ज्वलभावमखण्डमनिन्दितम् ॥२॥
ते निःसंशयमेव जगत्त्रयवन्दिताः,
सद्भावेन भवन्ति सुदृष्टया नन्दिताः।
कृत्यं स्वोचितमेव यतः किल कारणं,
जनयति नात्मविरुद्धमिहासाधारणम् ॥३॥
त्रिभिर्विशेषकम्।

## अथ श्रीनमिनाथजिनस्तुतिप्रारम्भः।

( पञ्चचामरं छन्दः )

नमीश निर्मलात्मरूप सत्यरूप शाश्वतं,
परोर्ध्वसिद्धिसौधमूर्ध्नि सत्स्वभावतः स्थितम्।

विधाय मानसाब्जकोशदेशमध्यवर्तिनं,
स्मरामि सर्वदा भवन्तमेव सर्वदर्शिनम् ॥१॥
प्रफुल्लकोकलाञ्छनप्रभूततेजसोऽद्य ते,
दिवाकरस्य वा महेश्वराभिदर्शनेन मे ।
प्रमादवर्धिनी सुदुर्मतिर्निशेव दुर्भगा,
गता प्रणाशमाशु हृत्कजे विनिद्रताऽभवत् ॥२॥
निरस्तदोषदुष्टकष्टकार्यमर्त्यसंस्तवो,
भवे भवे भवत्पदाम्बुजैकसेवकः प्रभो ।
भवेयमीदृशं भृशं मदीयचित्तचिन्तितं,
तव प्रसादतो भवत्ववन्ध्यमेव सत्वरम् ॥३॥

## अथ श्रीनेमिजिनस्तुतिप्रारम्भः ।

( उपजातिश्छन्दः )

विशुद्धविज्ञानभृतां वरेण,
शिवात्मजेन प्रशमाकरेण ।
येन प्रयासेन विनैव कामं,
विजित्य विक्रान्तनरं प्रकामम् ॥१॥
विहाय राज्यं चपलस्वभावं,
राजीमतिं राजकुमारिकां च ।
गत्वा सलीलं गिरिनारशैलं,
भेजे व्रतं केवलमुक्तियुक्तम् ॥२॥
निःशेषयोगीश्वरमौलिरत्नं,

जितेन्द्रियत्वे विहितप्रयत्नम् ।
तमुत्तमानन्दनिधानमेकं,
नमामि नेमिं विलसद्विवेकम् ॥३॥

## अथ श्रीपार्श्वजिनस्तुतिप्रारम्भः ।

( पञ्चचामरं छन्दः )

श्रयामि तं जिनं सदा मुदा प्रमादवर्जितं,
स्वकीयवाग्विलासतो जितोरुमेघगर्जितम् ।
जगत्प्रकामकामितप्रदानदक्षमक्षतं,
पदं दधानमुच्चकैरकैतवोपलक्षितम् ॥ १ ॥
सतामवद्यभेदकं प्रभूतसंपदां पदं,
वलक्षपक्षसंगतं जनेक्षणक्षणप्रदम् ।
सदैव यस्य दर्शनं विशां विमर्दितैनसां,
निहन्त्यशातजातमात्मभक्तिरक्तचेतसाम् ॥ २ ॥
आवाप्य यत्प्रसादमादितः पुरुश्रियो नरा,
भवन्ति मुक्तिगामिनस्ततः प्रभाप्रभास्वराः ।
भजेयमाश्वसेनदेवदेवमेव सत्पदं,
तमुच्चमानसेन शुद्धबोधवृद्धिलाभदम् ॥ ३ ॥

## अथ श्रीवीरजिनस्तुतिप्रारम्भः ।

( पृथ्वीछन्दः )

वरेण्यगुणवारिधिः परमनिर्वृतः सर्वदा,
समस्तकमलानिधिः सुरनरेन्द्रकोटिश्रितः ।

जनातिसुखदायको विगतकर्मवारो जिनः,
मुमुक्तजनसंगमस्त्वमसि वर्धमानप्रभो ॥ १ ॥
जिनेन्द्र भवतोऽद्भुतं मुखमुदारबिम्बस्थितं,
विकारपरिवर्जितं परमशान्तमुद्राङ्कितम् ।
निरीक्ष्य मुदितेक्षणः क्षणमितोऽस्मि यद्भावनां,
जिनेश जगदीश्वरोद्भवतु सैव मे सर्वदा ॥ २ ॥
विवेकिजनवल्लभं भुवि दुरात्मनां दुर्लभं,
दुरन्तदुरितव्यथाभरनिवारणे तत्परम् ।
तवाङ्ग पदपद्मयोर्युगमनिन्द्य वीरप्रभो,
प्रभूतसुखसिद्धये मम चिराय सम्पद्यताम् ॥ ३ ॥
हीनपुण्या न पश्यन्ति, रागान्धास्तत्त्वसंस्थितिम्
लाभेऽलाभफलं चैव, लभन्ते ते नराधमाः ॥ १ ॥
इति चैत्यवन्दनचतुर्विंशतिका समाप्ता ।

---

## अथ शोभनमुनिकृता चतुर्विंशतिजिनस्तुतिः ।

### अथश्री ऋषभजिनस्तुतिः ।

भव्याम्भोजविबोधनैकतरणे विस्तारिकर्मावली-रम्भासामज
नाभिनन्दन महानष्टापदाभासुरैः ।
भक्त्या वन्दितपादपद्म विदुषां संपादय प्रोज्झिता-रम्भासाम
जनाभिनन्दन महानष्टापदाभासुरैः ॥ १ ॥
ते वः पान्तु जिनोत्तमाः क्षतरुजो नाचिक्षिपुर्यन्मनो,
दारा विभ्रमरोचिताः सुमनसो मन्दारवा राजिताः ।

यत्पादो च सुरोज्झिताः सुरभयाञ्चक्रुःपतन्त्योऽम्बरा-
दाराविभ्रमरोचिताः सुमनसो मन्दारवाराजिताः ॥ २ ॥
शान्ति वस्तनुतान्मिथोऽनुगमनाद्यन्नैगमाद्यैर्नयै-रक्षोभं
जनहेऽतुलां छितमदोदीर्णाङ्गजालं कृतम् ।
तत्पूज्यैर्जगतां जिनैः प्रवचनं दृप्यत्कुवाद्यावली-
रक्षोभञ्जनहेतुलाञ्छितमदो दीर्णाङ्गजालंकृतम् ॥ ३ ॥
शीतांशुत्विषि यत्र नित्यमदधद्गन्धाढ्यधूलीकणा-
नाली केसरलालसा समुदिताशु भ्रामरीभासिता ।
पायाद्वः श्रुतदेवता निदधती तत्राब्जकान्ती क्रमौ
नालीके सरलालसा समुदिता शुभ्रामरीभासिता ॥ ४ ॥

इतिश्री ऋषभजिनस्तुतिः ।

## अथ श्रीअजितनाथस्तुतिः ।

तमजितमभिनौमि यो विराज-द्वनघनमेरुपरागमस्तकान्तम् ।
निजजननमहोत्सवेऽधितष्ठा-वनघनमेरु परागमस्तकान्तम् ॥१॥
स्तुत जिनिनिवहं तमर्तितमा-ध्वनदसुरामरवेण वस्तुवन्ति ।
यममरपतयः प्रगाय पार्श्वे-ध्वनदसुरामरवेणव स्तुवन्ति ॥ २ ॥
प्रवितर वसतिं त्रिलोकबन्धो, गम नययोगततान्तिमे पदे हे ।
जिनमत विततापवर्गवीथी-गमनययो गततान्ति मेऽपदेहे॥३॥
सितशकुनिगताशु मानसीद्धा-त्ततिमिरंमदभा सुराजिताशम् ।
वितरतु दधती पविं क्षतोध-त्ततिमिरं मदभासुराजिता शम्॥

इत्यजितनाथस्तुतिः ।

## अथ श्री शंभवजिनस्तुतिः ।

निर्भिन्नशत्रुभवभय शं भवकान्तारतार तार ममारम् ।
वितर त्रातजगत्त्रय शंभव कान्तारतारतारममारम् ॥ १ ॥
आश्रयतु तव प्रणतं विभया, परमा रमारमानमदमरैः ।
स्तुत रहित जिनकदम्बक, विभयापरमार मारमानमदमरैः॥२॥
जिनराज्या रचितं स्ता-दसमाननयानया नयायतमानम् ।
शिवशर्मणे मतं दधदसमाननयानयानया यतमानम् ॥ ३ ॥
शृङ्खलभृत्कनकनिभा याताम-समानमानमानवमहिताम् ।
श्रीवज्रशृङ्खलां कजयाताम-समानमानमानवमहिताम् ॥ ४ ॥

इति श्री शंभवजिनस्तुतिः ।

## अथ श्री अभिनन्दनजिनस्तुतिः ।

त्वमशुभान्यभिनन्दन नन्दिता-सुरवधूनयनः परमोदरः ।
स्मरकरीन्द्रविदारणकेसरिन्-सुरव धूनय नः परमोऽदरः॥१॥
जिनवराः प्रयतध्वमितामया, मम तमोहरणाय महारिणः ।
प्रदधतो भुवि विश्वजनीनता-ममतमोहरणा यमहारिणः॥२॥
असुमतां मृतिजात्यहिताय यो, जिनवरागम नो भवमायतम् ।
प्रलघुतां नय निर्मथितोद्धता-जिनवरागमनोभवमाय तम्॥३॥
विशिखशङ्खजुषा धनुषास्तस-त्सुरभिया ततनुन्नमहारिणा ।
परिगतां विशदामिह रोहिणीं, सुरभियाततनुं नम हारिणा ।४।

इति श्री अभिनन्दनजिनस्तुतिः ।

## अथ श्री सुमतिजिनस्तुतिः ।

मदमदनरहित नरहित,
सुमते सुमतेन कनकतारेतारे ।
दम दमपालय पालय,
दरादरातिक्षतिक्षपातः पातः ॥ १ ॥
विधुतारा विधुताराः,
सदा सदाना जिना जिताघाताघाः ।
तनुतापातनुतापा हितमा-
हितमानवनवविभवा विभवाः ॥ २ ॥
मतिमति जिनराजि नराहितेहिते,
रुचितरुचि तमोहे मोहे ।
मतमत नूनं नूनं स्मरास्मरा-
धीरधीरसुमतः सुमतः ॥ ३ ॥
नगदामानगदा मामहो,
महो राजिराजितरसा तरसा ।
घनघनकाली काली,
बतावतादूनदूनसत्रासत्रा ॥ ४ ॥

इति श्री सुमतिजिनस्तुतिः ।

## अथ श्री पद्मप्रभजिनस्तुतिः ।

पादद्वयी दलितपद्ममृदुः प्रमोद-
मुन्मुद्रताभरसदामलतान्तपात्री ।

पाद्मप्रभो प्रविदधातु सतां वितीर्ण-
मुन्मुद्रतामरसदा मलतान्तपात्री ॥ १ ॥
सा मे मतिं वितनुताज्जिनपङ्क्तिरस्त-
मुद्रा गतामरसभासुरमध्यगाद्याम् ।
रत्नांशुभिर्विदधती गगनान्तराल-
मुद्रागतामरसभासुरमध्यगाद्याम् ॥ २ ॥
श्रान्तिच्छिदं जिनवरागममाश्रयार्थ-
माराम मा नम लसन्तमसंगमानाम् ।
धामाग्रियं भवसरित्पतिसेतुमस्त-
मारामभानमलसंतमसं गमानाम् ॥ ३ ॥
गान्धारि वज्रमुसले जयतः समीर-
पातालसत्कुवलयावलिनीलभे ते ।
कीर्तीः करप्रणयिनी तव ये निरुद्ध-
पातालसत्कुवलया बलिनी लभेते ॥ ४ ॥
इति श्री पद्मप्रभजिनस्तुतिः ।

## अथ श्री सुपार्श्वजिनस्तुतिः ।

कृतनति कृतवान्यो जन्तुजातं निरस्त-
स्मरपरमदमायामानवाधायशस्तम् ।
सुचिरमविचलत्वं चित्तवृत्तेः सुपार्श्वं,
स्मर परमदमाया मानवाधाय शस्तम् ॥ १ ॥
व्रजतु जिनततिः सा गोचरं चित्तवृत्तेः,

सदमरसहिताया वोऽधिका आनवानाम् ।
पदमुपरि दधाना वारिजानां व्यहार्षी-
त्सदमरसहिता या बोधिकामा नवानाम् ॥ २ ॥
दिशदुपशमसौख्यं संयतानां सदैवो-
रु जिनमतमुदारं काममायामहारि ।
जननमरणरीणान्वासयन्सिद्धवासे-
ऽरुजि नमतमुदारं काममायामहारि ॥ ३ ॥
दधति रविसपत्नं रत्ननाभास्तभास्व-
न्नवघनतरवारिं त्वा रणारावरीणाम् ।
गतवति विकरत्यालीं महामानसीष्टा-
न्नव घनतरवारिं वारणारावरीणाम् ॥ ४ ॥

इति श्री सुपार्श्वजिनस्तुतिः ।

## अथ श्री चन्द्रप्रभजिनस्तुतिः ।

तुभ्यं चन्द्रप्रभ जिन नमस्तामसोज्जृम्भितानां
हाने कान्तानलसम दयावन्दितायासमान ।
विद्वत्पंपङ्क्त्या प्रकटित पृथुस्पष्ट दृष्टान्त हे तू-
हानेकान्तानलसमदया वन्दितायासमान ॥ १ ॥
जीयाद्राजिर्जनितजननज्यानिहानिर्जिनानां
सत्यागारञ्जयदमितरुक्सारविन्दावतारम् ।
भव्योद्धृत्या भुविकृतवती या वहद्धर्मचक्रं
सत्यागा रञ्जयदमितरुक्सा रविन्दावतारम् ॥ २ ॥

सिद्धांतः स्तादहितहतयेऽख्यापयद्यं जिनेन्द्रः
सद्राजीवः सकविधिषणापादनेऽकोपमानः।
दक्षः साक्षाच्छ्रवणचुलकैर्यं च मोदाद्विहायः–
सद्राजीवः सकविधिपणा पादनेऽकोपमानः ॥ ३ ॥
वज्राङ्कुश्यङ्कुशकुलिशभृत्त्वं विधत्स्व प्रयत्नं
स्वायत्यागे तनुमदवने हेमतारातिमत्ते।
अध्यारूढे शशधरकरश्वेतभासि द्विपेन्द्रे
स्वायत्यागेऽतनुमदवने हेऽमतारातिमत्ते ॥ ४ ॥

इति श्री चंद्रप्रभजिनस्तुतिः

## ॥ अथ श्री सुविधिजिनस्तुतिः ॥

तवाभिवृद्धिं सुविधिर्विधेयात्स भासुरालीनतपा दयावन्।
यो योगिपङ्क्त्या प्रणतो नभःसत्सभासुरालीनतपादयावन् ।१।
या जन्तुजाताय हितानि राजी सारा जीनानामलपद्ममालम्।
दिश्यान्मुदं पादयुगं दधाना साराजीनानामलपद्ममालम् ॥२॥
जिनेन्द्र भङ्गैः प्रसभं गभीराशु भारती शस्यतमस्तवेन।
निर्नाशयन्ति मम शर्म दिश्यात् शुभारतीशस्य तमस्तवेन ॥३॥
दिश्यास्तवाशु ज्वलनायुधाल्पमध्या सिता कम्प्रवरालकस्य।
अस्लेन्दुरास्यस्य रुचोरुपृष्ठमध्यासिताकम्प्रवरालकस्य ॥४॥

इति श्री सुविधिजिनस्तुतिः

## अथ श्री शीतलजिनस्तुतिः ॥

जयति शीतलतीर्थकृतः सदा चलनतामरसं सदलं घनम्।

नवकमम्बुरुहां पथि संस्पृशच्चलनतामरसंसदलंघनम् ॥१॥
स्मर जिनान्परिनुन्नजरारजोजननतानवतोदयमानतः ।
परमनिर्वृतिशर्मकृतो यतो जन नतानवनोऽदयमानतः ॥२॥
जयति कल्पितकल्पतरूपमं मतमसारतरागमदारिणा ।
प्रथितमत्र जिनेन मनीषिणामतमसा रतरागमदारिणा ॥३॥
घनरुचिर्जयताद्भुवि मानवी गुरुतरा विहतामरसंगता ।
कृतकरात्नवरे फलपत्रभागुरुतरा विहतामरसं गता ॥४॥

इति श्री शीतलजिनस्तुतिः ।

## अथ श्री श्रेयांसजिनस्तुतिः ।

कुसुमधनुषा यस्मादन्यं न मोहवशं व्यधुः
कमलसदृशां गीतारावा बलादयि तापितम् ।
प्रणमततमां द्राक्श्रेयांसं न चाहृत यन्मनः
कमलसदृशाङ्गी तारा वाबलादयितापि तम् ।१।
जिनवरततिर्जीवालीनामकारणवत्सला-
समदमहितामारादिष्टा समानवराजया ।
नमदमृतभुक्पङ्क्त्या नूता तनोतु मतिं ममा-
समदमहितामारादिष्टा समानवराजया ॥२॥
भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत हे
तनु मतिमतां सन्नाशानां सदा नरसंपदम् ।
समभिलषतामर्हन्नाथागमानतभूपतिं
तनुमति मतां सन्नाशानां सदानरसं पदम् ॥३॥

धृतपविफलाक्षालीघण्टैः करैः कृतबोधित
प्रजयतिमहा कालीमर्त्याधिपङ्कजराजिभिः ।
निजतनुलतामध्यासीनां दधत्यपरिक्षतां
प्रजयति महाकाली मर्त्याधिपं कजराजिभिः ॥४॥

इति श्री श्रेयांसजिनस्तुतिः ।

## अथ श्री वासुपूज्यजिनस्तुतिः ।

पूज्य श्रीवासुपूज्यत्वजिन जिनपते नूतनादित्यकान्ते-
ऽमायासंसारवासावन वर तरसाली नवालानबाहो ।
आनम्रा त्रायतां श्रीप्रभवभवभयाद्बिभ्रती भक्तिभाजा-
मायासं सारवासावनवरतरसालीनवालानबाहो ॥१॥
पूतो यत्पादपांशुः शिरसि सुरततेराचरच्चूर्णशोभां
या तापत्रासमाना प्रतिमदमवतीहार ताराजयन्ती ।
कीर्तेः कान्त्या ततिः सा प्रविकिरतुतरां जैनराजी रजस्ते
यातापत्रासमानाप्रतिमदमवती हारतारा जयन्ती ॥ २ ॥
नित्यं हेतूपपत्तिप्रतिहतकुमतप्रोद्धतध्वान्तबन्धा-
पापायासद्यमानामदन तव सुधासारहृद्या हितानि ॥
वाणी निर्वाणमार्गप्रणयिपरिगता तीर्थनाथक्रियान्मे
पायायासाद्यमानामदनत वसुधासार हृद्याहितानि ॥ ३ ॥
रक्षःक्षुद्रग्रहादिप्रतिहतिशमनी वाहितश्वेतभास्व-
त्सन्नालीका सदा सापरिकरमुदिता साक्षमाला भवन्तम्
शुभ्रा श्रीशान्तिदेवी जगति जनयतान्कुण्डिका भाति यस्याः
सन्नालीका सदाप्ता परिकरमुदिता सा क्षमालाभवन्तम् ॥४॥

इति श्री वासुपूज्यजिनस्तुतिः ।

## अथ श्री विमलजिनस्तुतिः ।

अपापदमलं घनं शमितमानमामो हितं
नतामरसभासुरं त्रिमलमालयामोदितम् ।
अपापदमलंघनं शमतिमानमामोहितं
न तामरसभासुरं विमलमालयामोदितम् ॥१॥
सदानवसुराजिता असमरा जिना भीरदाः
क्रियासु रुचितासु ते सकलभा रतीरायताः ।
सदानवसुराजिता असमराजीनाभीरदा
क्रियासुरुचितासु ते सकलभारतीरा यताः ॥२॥
सदा यतिगुरोरहो नमत मानवैरञ्चितं
मतं वरदमेनसा रहितमाद्यताभावतः ।
सदायति गुरोरहो न मतमावैरं चितं
मतं वरदमेन सारहितमायता भावतः ॥३॥
प्रभाजि तनुतामलं परमचापला रोहिणी
सुधावसुरभीमना मयि सभाक्षमालेहितम् ।
प्रभाजितनुतामलं परमचापलारोहिणी
सुधावसुरभीमनामयिसभा क्षमाले हितम् ॥४॥

इति श्री विमलजिनस्तुतिः।

## अथ श्री अनन्तजिनस्तुतिः।

सकलधौतसहासनमेरवस्तव दिशन्त्वभिषेकजलप्लुवाः ।
मतमनन्तजितः स्नपितोल्लसत्सकलधौतसहासनमेरवः ॥१॥

मम रतामरसेवित ते क्षणप्रद निहन्तु जिनेन्द्रकदम्बक ।
वरद पादयुगं गतमङ्गतामभरतामरसे वितनेक्षण ॥२॥
परमतापदमानसजन्मनःप्रियपदं भवतो भवतोऽवतात् ।
जिनपतेर्मतमस्तजगत्त्रयीपरमतापदमानसजन्मनः ॥३॥
रसितमुच्चतुरङ्गमनायकं दिशतु काञ्चनकान्तिरिताच्युता ।
धृतधनुःफलकासिशरा करे रसितमुच्चतुरं गमनाय कम् ॥४॥

इति श्री अनन्तजिनस्तुतिः ।

## अथ श्री श्रीधर्मजिनस्तुतिः

नमः श्रीधर्म निष्कर्मोदयाय महितायते ।
मर्त्यामरेन्द्रनागेन्द्रैर्दयायमहिताय ते ॥१॥
जीयाज्जिनौघो ध्वान्तान्तं ततान लसमानया ।
भामण्डलत्विषा यः स ततानलसमानया ॥२॥
भारति द्राग्जिनेन्द्राणां नवनौ रक्षतारिके ।
संसाराम्भोनिधावस्मानवनौ रक्ष तारिके ॥३॥
केकिस्था वः क्रियाच्छक्तिकरा लाभानयाचिता ।
मङ्गभिर्नूतनाम्भोजकरालाभा नयाचिता ॥४॥

इति श्री श्रीधर्मजिनस्तुतिः ।

## अथ श्री शान्तिनाथजिनस्तुतिः ।

राजन्त्या नवपद्मरागरुचिरैः पादैर्जिताऽष्टापदा-
द्रेऽकोपद्रुत जातरूपविभया तन्वार्य धीर क्षमाम् ।

विभ्रत्यामरसेव्यया जिनपते श्रीशान्तिनाथास्मरो-
द्रेकोपद्रुत जातरूप विभयातन्वार्यधीं रक्ष माम् ॥१॥
ते जीयासुरविद्विषो जिनवृषा मालां दधाना रजो-
राज्या मेदुरपारिजातसुमनःसंतानकान्तां चिताः
कीर्त्या कुन्दसमत्विषेषदपि ये न प्राप्तलोकत्रयी-
राज्या मेदुरपारिजातसुमनःसंतानकान्ताश्चिताः ॥२॥
जैनेन्द्रं मतमातनोतु सततं सम्यग्दृशां सद्गुणा-
लीलाभं गमहारि भिन्नमदनं तापापहृद्यामरम् ।
दुर्निर्भेद निरन्तरान्तरतमोनिर्नाशि पर्युल्लस-
ल्लीलाभङ्गमहारिभिन्नमदनन्तापापहृद्यामरम् ॥३॥
दण्डच्छत्रकमण्डलूनि कलयन्स ब्रह्मशान्तिः क्रिया-
त्संत्यज्यानिशमी क्षणेनशमिनोमुक्ताक्षमालीहितम् ।
तप्ताष्टापदपिण्डपिङ्गलरुचिर्योऽधारयन्मूढतां
संत्यज्यानिशमीक्षणेन शमिनो मुक्ताक्षमाली-
हितम् ॥४॥

इति श्री शान्तिनाथजिनस्तुतिः ।

## अथ श्री कुन्थुनाथजीनस्तुतिः ।

भवतु मम मनः श्रीकुन्थुनाथाय तस्मा-
यमितशमितमोहायामितापाय हृद्यः ।
सकलभरतभर्ताभूज्जिनोऽप्यक्षपाशा-
यमिनशमितमोहायामितापायहृद्यः ॥१॥

सकलजिनपतिभ्यः पावनेभ्यो नमः स-
न्नयनरवरदेभ्यः सारवादस्तुतेभ्यः ।
समधिगतनुतिभ्यो देववृन्दाद्गरीयो-
नयनरवरदेभ्यः सारवादस्तु तेभ्यः ॥२॥
स्मरत विगतमुद्रं जैनचन्द्रं चकास-
त्कविपदगमभङ्गं हेतुदन्तं कृतान्तम् ।
द्विरदमिव समुद्यद्दानमार्गं धुताघं-
कविपदगमभङ्ग हे तुदन्तं कृतान्तम् ॥३॥
प्रचलदचिररोचिश्चारुगात्रे समुद्य-
त्सदसिफलकरामेऽभीमहासेऽरिभीते ।
सपदि सुरुपदत्ते ते भवन्तु प्रसादाः
सदसि फलकरा मेऽभीमहासेऽरिभीते ॥४॥

इति श्री कुन्थुनाथजिनस्तुतिः ।

## अथ श्रीअरनाथजिनस्तुतिः ।

व्यमुचच्चक्रवर्तिलक्ष्मीमिह तृणमिव यः क्षणेन तं
सन्नमदमरमानसंसारमनेकपराजितामरम् ।
द्रुतकलधौतकान्तमानमतानन्दितभूरिभक्तिभा-
क्संमदमरमानसं सारमनेकपराजितामरम् ॥ १ ॥
स्तौति समन्ततः स्म समवसरण भूमौ यं सुरावलिः
सकलकलाकलापकलितापमदारुणकरमपापदम् ।
तं जिनराजविसरमुज्जासितजन्मजरं नमाम्यहं
सकलकला कलापकलितापमदारुणकरमपापदम् ॥ २ ॥

भीममहाभवाब्धिभवभीतिविभेदि परास्तविस्फुर-
त्परमतमोहमानमतनूनमलं घनमघवर्ततेऽहितम् ।
जिनपतिमतमपारमर्त्यामरनिर्वृतिशर्मकारणं
परमतमोहमानमतनूनमलङ्घनमघवर्ततेऽहितम् ॥ ३ ॥
यात्र विचित्रवर्णविनतात्मजपृष्ठमधिष्ठिता हुता-
त्समतनुभागविकृतधीरसमदैरिव धामहारिभिः ।
तडिदिव भाति सांध्यघनमूर्धनि चक्रधरास्तुसामुदे-
ऽममतनुभा गवि कृतधीरसमदैरिवधा महारिभिः ॥४॥

इति श्री अरनाथजिनस्तुतिः ।

## अथ श्री मल्लिनाथजिनस्तुतिः ।

नुदंस्तनुं प्रवितर मल्लिनाथ मे
प्रियङ्गुरोचिररुचिरोचितां वरम् ।
विडम्बयन्वररुचिमण्डलोज्ज्वलः
प्रिये गुरोऽचिररुचिरोचिताम्बरम् ॥ १ ॥
जवाद्गतं जगदवतो वपुर्यथाकदम्बकैरवशतपत्रसं पदम् ।
जिनोत्तमान्स्तुत दधतः स्रजं स्फुरत्कदम्बकैरवशतपत्रसंपदम् २
स संपदं दिशतु जिनोत्तमागमः
शमा वहन्नतनुतमोहरोदिते ।
स चित्तभूः क्षत इह येन यस्तपः-
शमा वहन्ननुतमोहरोदिते ॥ ३ ॥
द्विपं गतो हृदि रमतां दमश्रिया

प्रभाति मे चकितहरिद्विपं नगे।
वटाह्वये कृतवसतिश्च यक्षराट्
प्रभातिमेचकितहरिद्विपन्नगे ॥ ४ ॥

इति श्री मल्लिनाथजिनस्तुतिः।

## अथ श्री मुनिसुव्रतजिनस्तुतिः।

जिनमुनिसुव्रतः समवताज्जनतावनतः
समुदितमानवां धनमलोभवतो भवतः।
अवनिविकीर्णमादिषत यस्य निरस्तमनः–
समुदितमानवाधनमलो भवतो भवतः ॥ १ ॥
प्रणमत तं जिनव्रजमपारविसारिरजो
दलकमलानना महिमधाम भयासमरुक्।
यमतितरां सुरेन्द्रवरयोषिदिलामिलनो–
दलकमला ननाम हिमधामभया समरुक् ॥ २ ॥
त्वमवनताञ्जिनोत्तमकृतान्त भवाद्रिदुषो–
ऽव सदनुमानसंगमन याततमोदयितः।
शिवसुखसाधकं स्वभिदधत्सुधियां चरणं
वसदनु मानसं गमनयातत मोदयितः ॥ ३ ॥
अधिगतगोधिका कनकरुक्तव गौर्युचिता–
क्षमलकराजि तामरसभास्यतुलोपकृतम्।
मृगमदपत्रभङ्गतिलकैर्वदनं दधती
कमलकरा जितामरसभास्यतु लोपकृतम् ॥ ३ ॥

इति श्री मुनिसुव्रतजिनस्तुतिः।

## अथ श्री नमिनाथजिनस्तुतिः ।

स्फुरद्विद्युत्कान्ते प्रविकिर वितन्वन्ति सततं
ममायासं चारो दितमद नमेऽघानि लपितः ।
नमद्भव्यश्रेणीभवभयभिदां हृद्यवचसा-
ममायासंचारोदितमदनमेघानिल पितः ॥ १ ॥
नखांशुश्रेणीभिः कपिशितनमन्नाकिमुकुटः
सदा नोदी नानामयमलमदारेरित तमः ।
प्रचक्रे विश्वं य स जयति जिनाधीशनिवहः
सदा नो दीनानामयमलमदारेरिततमः ॥ २ ॥
जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधो
गुरुर्वाहोऽपातापदघनगरीयानसुमतः ।
कृतान्तस्त्रासीष्ट स्फुटविकटहेतुप्रमितिभा-
गुरुर्वाहो पाता पदघनगरीयानसुमतः ॥ ३ ॥
विपक्षव्यूहं वो दलयतु गदाक्षावलिधरा-
समा नालीकालीविशदचलना नालिकवरम् ।
समध्यासीनाम्भोभृतघननिभाम्भोधितनया-
समानाली काली विशदचलनानालिकवरम् ॥ ४ ॥

इति श्री नमिनाथजिनस्तुतिः ।

## अथ श्री नेमिनाथजिनस्तुतिः ।

चिक्षेपोर्जितराजकं रणमुखे यो लक्षसंख्यं क्षणा-
दक्षामं जन भासमानमहसं राजीमतीतापदम् ।
तं नेमिं नम नम्रनिर्वृतिकरं चक्रे यदूनां च यो

दक्षामञ्जनभासमानमहसं राजीमतीतापदम् ॥ १ ॥
प्राव्राजीज्जितराज्जका रज इव ज्यायोऽपिराज्यंजवाद्या
संसारमहोदधावपि हिता शास्त्रीविहायोदितम् ।
यस्याः सर्वन एव सा हरतु नो राजी जिनानां भवा-
यासं सारमहो दधावपि हिता शास्त्रीविहायोदितम् ॥२॥
कुर्वाणाणुपदार्थदर्शनवशाद्भास्वत्प्रभायात्वपा-
मानत्या जनकृत्तमोहरत मे शस्तादरिद्रोहिका ॥
अक्षोभ्या तव भारती जिनपते प्रोन्मादिनां वादिनां
मानत्याजनकृत्तमोहरतमेश स्तादरिद्रोहिका ॥ ३ ॥
हस्तालम्बितचूतलुम्बिलतिका यस्या जनोऽभ्यागम-
द्विश्वासेविततातम्रपादपरतां वाचा रिपुत्रासकृत् ।
सा भूतिं वितनोतु नोऽर्जुनरुचिः सिंहेऽधिरूढोल्लस-
द्विश्वासे विततात्रपादपरताम्बा चारिपुत्रासकृत ॥ ४ ॥

इति श्री नेमिनाथजिनस्तुतिः ।

## अथ श्री पार्श्वनाथजिनस्तुतिः ।

मालामालानबाहुर्दधददधदरं यामुदारा मुदारा-
ल्लीनालीनामिहाली मधुरमधुरसां सूचितोमाचितो मा ।
पातात्पातात्स पार्श्वो रुचिररुचिरदो देवराजीवराजी
पत्रापत्रा यदीया तनुरतनुरवो नन्दको नोदको नो ॥ १ ॥
राजी राजीववक्त्रा तरलतरलसत्केतुरङ्गत्तुरङ्ग-
व्यालव्यालग्नयोधाचितरचितरणेभीतिहृद्यातिहृद्या ।
सारा साराज्जिनानामलममलमतेर्बोधिका माधिकामा-

दव्याद्व्याधिकालाननजननजरात्रासमानासमाना ॥ २ ॥
सद्यो सद्योगभिद्धागमलगमलयाजैनराजीनराजी
नूता नूतार्थधात्रीह ततहततमः पातकापातकामा ।
शास्त्री शास्त्री नराणां हृदयहृदयशोरोधिकाबाधिका वा-
देया देयान्मुदं ते मनुजमनुजरां त्याजयन्ती जयन्ती ॥३॥
याता या तारतेजाः सदसि सदसिभृत्कालकान्तालकान्ता
पारिं पारिन्द्रराजं सुरवसुरवधूपूजितारं जितारम् ।
सा त्रासात्त्रायतां त्वामविषमविषभृद्भूषणाभीषणाभी-
हीनाहीनाग्र्यपत्नी कुवलयवलयश्यामदेहामदेहा ॥ ४ ॥

इति श्री पार्श्वनाथजिनस्तुतिः ।

## अथ श्री महावीरजिनस्तुतिः ।

नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दार-
मालारजोरञ्जितांघ्रे धरित्रीकृतावन वरतम
संगमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षि-
तामोहिताक्षोभवान् ।
मम वितरतु वीर निर्वाणशर्माणि
जातावतारो धराधीशसिद्धा-
र्थधाम्नि क्षमालंकृतावनवरतमसङ्गमोदार-
तारोदितानङ्गनार्याव लीलापदे
हे क्षितामो हिताक्षोभवान् ॥ १ ॥
समवसरणमत्र यस्याः स्फुरत्केतुचक्रानकाने-

कपञ्जेन्दुरुक्चामरोत्सर्पिसालत्रयीसद्वन-
मद्शोकपृथ्वीक्षणमायशोभा-
तपत्रप्रभागुर्वराराट् परेताहिताारोचितम् ।
प्रवितरतु समीहितं साऽर्हतां संहतिर्भक्तिभाजां
भवाम्भोधिसंभ्रान्तभव्यावलीसेविता-
सद्वनमद्शोकपृथ्वीक्षणमा
यशोभातपत्रप्रभागुर्वराराट्परेताहिताारोचितम् ॥ २ ॥
परमततिमिरोग्रभानुप्रभा भूरिभङ्गैर्गभीरा
भृशं विश्वत्रये निकाय्ये वितीर्यात्तरा-
महति मतिमते हि ते शस्यमानस्य वासं
सदा तन्वतीतापदानन्दधानस्य सामानिनः ।
जननमृतितरङ्गनिष्पारसंसारनीरा-
करान्तर्निमज्जज्जनोत्तारनौर्भारतीतीर्थकृत्
महति मतिमतेहितेशस्य मानस्य वा संसदातन्वती
तापदानं दधानस्य सा मानि नः ॥ ३ ॥
सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहार-
स्फुरद्रश्मिसारक्रमाम्भोरुहे
परमवसुतराङ्गजा रावसन्नाशितारातिं
भाराजिते भासिनी हारतारा बलक्षेमदा ।
क्षणरुचिरुचिरोरुचञ्चत्सटासंकटो-
त्कृष्टकण्ठोद्भटे संस्थिते भव्यलोकं
त्वमम्बाम्बिके परमव सुतरां गजारावसन्ना
शितारातिभा राजिते भासिनीहारताराबलक्षेऽमदा ॥४॥

इति श्री महावीर स्तुतिः ।

# अथान्याः स्तुतयः। अथ ऋषभस्तुतिः।

दिश सुखमखिलं नः सीरसाधारणस्त्वं
वृषभरतरसायामीश मानं दधानः।
सुरनरनिकरेण स्तूयसे यः सदोद्य-
दृषभरतरसायामीशमानंदधानः ॥ १ ॥
सुजनजिनवराणां स्तोममस्तस्मराणां
व्रजमघवलयानां तन्त्रपात्रं पराणाम्।
पवन इव पयोदं योऽनयन्नाशमाशु
व्रजमघवलयानांतन्त्रपात्रंपराणाम् ॥ २ ॥
उचितमिह भवन्तं सर्ववित्सार्वभौमा-
गमतनुमहतां मे ध्यानमस्तारभावम्।
निखिलसुखनिदानं कामितार्थैकदैवा-
गमतनुमहतां मे ध्यानमस्तारभावम् ॥ ३ ॥
त्रिदशततिनता श्रीधाम चक्रेश्वरी सा
जयति मुदितहृद्यातापमानासमाना।
प्रणमति नरराजिर्यां स्तुतध्वस्तदम्भा
जयति मुदितहृद्यातापमानासमाना ॥ ४ ॥

इति श्री ऋषभस्तुतिः ॥ १ ॥

## अथाजितनाथस्तुति ॥ २ ॥

मनसि मनसिजेशं धेहि तीर्थाधिपंसत्
तमजितमदमोहेसाध्वसंगेयशोभम्।

अगतमनसमेणीहग्गणेसाम्यशर्मे
नमजितमदमोहैसाध्वसंगेयशोभम ॥ १ ॥
मनसि जिनवराणां स्तोममस्ताभिमान–
स्मरतरसमदम्भं देहिनां भोगतारम ।
सुकृतवनविताने वारिवाहं समूहाः
स्मरतरसमदम्भं देहिनां भोगतारम ॥ २ ॥
निहितनिखिलशस्तं ध्वस्तसद्रोहमोहा
जिनमतमहतारंभेदि नानामयानाम ।
अनृतदृशि जनौघे तस्थुषां हन्तृनित्यं
जिनमतमहतारं भेदि नानामयानाम् ॥ ३ ॥
वितनुसुतनुसंपद्रश्मिरूपाभिभूता–
शनिरतिरजितेशंमेदुरापङ्कलाभा ।
नयनिगमनियोगैः सेवमानामहर्षी–
र्शनिरतिरजितेशं मेदुरापङ्कलाभा ॥ ४ ॥

इत्यजितस्तुतिः ।

## अथ श्री शंभवजिनस्तुतिप्रारम्भः ॥ ३ ॥

पथि मथितदुरन्तद्रोहमोहप्रसून–
ध्वजनयसहिते नः पुण्यकान्ते सदैव ।
जिनजनितशिवश्रीसंगरङ्गतुरङ्ग–
ध्वजनयसहितेनःपुण्यकान्तेसदैव ॥ १ ॥
निवह जिनवराणां श्रेयसा पीवराणां

शुभवतिरुचिरेनःकाममुद्रामतारे ।
भवतु भुवनवाहे चातकानामिवेहा-
शुभवतिरुचिरेनःकाममुद्रामतारे ॥ २ ॥
वसतु तव रहस्यं छर्म मेऽर्हद्गिरांसत्
कलयति रतिपाले ह्यमानन्ददानम् ।
पशुपरिवृढभावं यन्महार्थैः सनाथं
कलयति रतिपाले ह्यमानन्ददानम् ॥ ३ ॥
स्वसदृशमदृशं श्रीसाधुसंघेन येचि-
द्वसुहृदिदुरितारेधीरमातानवेहे ।
प्रकटितपटुकोपाटोपरूपस्वरूपा-
वसुहृदि दुरितारे धीरमातानवेहे ॥ ४ ॥

इति श्री शंभवजिनस्तुतिः ॥ ३ ॥

## अथाभिनन्दनजिनस्तुतिः ॥ ४ ॥

जनयतु कपिकेतो देवसान्तं वरोयः,
शमनतवसुधीभोज्यानिकामानयानाम् ।
जगति दुरधिगम्यां मूर्तिमर्च्चन्त्यमाया
शमनतवसुधीभोज्यानिकामानयानाम् ॥ १ ॥
विजितकुमतगर्वं सर्वविद्वृन्दचञ्च-
त्करमहमतिवित्तं ज्ञानतारागधीरम् ।
हृदि मुदितमनस्कं त्वां वहे शालिलीला-
करमहमतिचित्तं ज्ञानतारागधीरम् ॥ २ ॥

पिबत विबुधधुर्याः कर्णपत्रैर्जिनानां,
समयममृतकल्पं वित्तमानाश्रितानाम् ।
विलसदतिशयश्रीभोगयोगैः सदैवा-
समयममृतकल्पं वित्तमानाश्रितानाम् ॥ ३ ॥
नलिनमलिनिवासं साधुसार्थं स्रवन्ता-
नमदमरसमेतां कालिकान्तामुदारम् ।
हरिहरिणदृशो यां भाग्यभाजं भजन्ते
नमदमरसमेतां कालिकान्तामुदारम् ॥ ४ ॥
इत्यभिनन्दनजिनस्तुतिः ॥ ४ ॥

## अथ श्री सुमतिजिनस्तुतिः ॥ ५ ॥

मनुजंजिनमजन्याजेयमात्मीयवित्ते
वसुमतिमतमानन्दानवासंगतारम् ।
नमदमरनरेशश्रेणिसंसेवितांघ्रि
वसुमतिमतमानन्दानवासंगतारम् ॥ १ ॥
निजहिचयमघानामर्हतां व्रातसंपत्
प्रदरजनिनिभानां विश्वपद्मांशुकानाम् ।
वचनमहृत येषां हारिणामाम्रपुष्प-
प्रदरजनिनिभानां विश्वपद्मांशुकानाम् ॥ २ ॥
जिनवचनभवाब्धौ मज्जतामङ्गभाजां
भवजनितरसायं तत्त्वमालम्बनाय ।
दिशसि गृहमपास्य प्रस्थितानामचेतो-
भवजनितरसायंतत्त्वमालम्बनाय ॥ ३ ॥

कुरु रिपुमलकौघैः सा महाकालिनुन्नां
जनरुचिरमहीनाभङ्गतापन्नवेहे ।
युवतिततिषु रूपं ते यशः प्राप गौरी-
जनरुचिरमहीनाभङ्गतापन्नवेहे ॥ ४ ॥

इति श्री सुमतिजिनस्तुति· ॥ ५ ॥

## अथ श्री पद्मप्रभजिनस्तुतिः ॥ ६ ॥

प्रहरतु हरिपीठं ते स्थितं वर्ष्मपद्म-
प्रभममतरसालंकृत्यवित्तातमोहम् ।
यदभजनविभूतिः शालिबालप्रवाल-
प्रभममतरसालं कृत्यवित्तातमोहम ॥ १ ॥
सृजतु जिनवरा वः पादयुग्मं न तज्ज्ञा-
वलिकमलमतन्द्रावन्दितामन्त्रपात्रैः ।
कुलिशमिव गिरीणां द्रागरीणामृषीशै-
र्वलिकमलमतन्द्रावन्दितामन्त्रपात्रैः ॥ २ ॥
जनय जिनवराणां स्व मनोध्वंसितागो
गिरिसुरमहितायां सज्जनानापदायाम ।
युगपदखिललोकास्तोकहर्षप्रदायां
गिरिसुरमहितायां सज्जनानापदायाम् ॥ ३ ॥
वरमचरतरश्रीरच्युतेनः प्रनष्टां
धतुतरतिरमानाशंसनामायदेहे ।

सपदि शिरसि हस्तं नाप्य यस्या अयं स-
द्भुतरतिरमानाशंसनामायदेहे ॥ ४ ॥

इति श्री पद्मप्रभजिनस्तुतिः ॥ ६ ॥

## अथ श्री सुपार्श्वस्तुतिः ॥ ७ ॥

सततमतिलसन्त्या कायकान्त्यास्तकातं-
स्वरमहसमबालं स्वस्तिकान्तं सुपार्श्वम् ।
हृदि विदितनिकामास्तोकलोकं गभीर-
स्वरमहसमवालं स्वस्तिकान्तं सुपार्श्वम् ॥ १ ॥

जिनगणमितमेहेभेदिनं पथ्यपेतै-
नसितमहसमारंभागशंबन्धनानाम् ।
गृहमिवयकमाहुर्भीमिताकान्ततास्ते
नसितमहसमारंभागशंबन्धनानाम् ॥ २ ॥

सृजतु जिनवचो वः सत्फलं स्वान्तभूमा-
विहितदरममायज्ञानकन्दं भवन्तम् ।
यदवति हरदुच्चैर्दण्डयद्धादिलोकं
विहितदरममायज्ञानकन्दं भवन्तम् ॥ ३ ॥

नमतनमदमर्त्याशेषरामाभिरामां
गजगतिमुदिताशां तामुदाराममानाम् ।
अनिशमिह सुपार्श्वस्वामिमूर्तिं नमत्यं-
गजगति मुदिता शांता मुदारा ममानाम् ॥४॥

इति श्री सुपार्श्वस्तुतिः ॥ ७ ॥

## अथ श्री चन्द्रप्रभस्तुतिः । ॥ ८ ॥

विदधतमखिलानां शर्मणां देवचन्द्रा–
ङ्कविहितमहमालापारकेलीनमायम् ।
गहनभवपयोधौ यानपात्रं स्तुवे त्वां
कविहितमहमालापारकेलीनमायम् ॥ १ ॥
जिननिकरमुनीनां मण्डलं खण्डितांहः
समरसकलमत्याभावविघातरोगम् ।
प्रवरविदुरवीथ्यावन्दितांह्रि नितान्ता–
समरसकलमत्याभावविघातरोगम् ॥ २ ॥
स्थितममृतपदे तद्दातु जैनं वचो वः
कमलमनवमाये भीमहीने हितार्थम् ।
धृतिवनमभनगयतश्रृण्वतां नाङ्गिनां स–(?)
त्कमलमनवमाये भीमहीने हितार्थम् ॥ ३ ॥
सफलयतु जनानां दीप्तिभिर्दीपयन्ती
भृकुटिरसिकरामाशामघोनासदाना ।
कृतनुतिरघघाते बिभ्रती वक्रमुग्र–
भृकुटिरसिकरामाशामघोनासदाना ॥ ४ ॥

इति श्री चन्द्रप्रभजिनस्तुतिः ॥ ८ ॥

## अथ श्री सुविधिस्तुतिः ॥ ९ ॥

सुविधिरवधिरेनश्छेदिना वः स पाया–
दमृतरुचिरकामो दारधीरस्तमोहः ।

मुनिमनुजमनोऽब्धिप्रीणने यः सदासी-
दमृतरुचिरकामोदारधीरस्तमोहः ॥ १ ॥
प्रमुखमृषिसमूहे तं जिनौघं ददानं
नमतलसदयेशंमानवाधाम वामम् ।
अभजत भगवन्तं यं सुखश्रीर्भवार्त्या
नमतलसदये शंमानवा धामवामम् ॥ २ ॥
भवपयसि गभीरे मज्जतां रक्षणार्थ-
मनघनरसमर्थं सज्जपंकेवलेन । ?
भगवदभिहितानांनौसमानासमाना ?
मनघनरसमर्थंसज्जपंकेवलेन ॥ ३ ॥
हरतु सुरवधूभिः शोभमानाकलाभा
गविनयमहितानां भासमानासुताराम् ।
निकरमृषिवराणां या स्तवादस्तवैरा
गविनयमहितानां भासमाना सुताराम् ॥ ४ ॥

इति श्री सुविधिस्तुतिः ॥ ९ ॥

## अथ श्री बप्पभट्टसूरिकृताः स्तुतयः ।

## अथऋषभस्तुतिः ।

नागेन्द्रमौलिगलितोत्तमपारिजात-
मालार्चितक्रम भवन्तमपारिजात ।
नाभेय नौमि भुवनत्रिकपापवर्ग-
दायिन्न्यपास्तमदनादिकपापवर्ग ॥ १ ॥

दारिद्र्यमद्रिसमविग्रह तापनीय-
राशिप्रदानविधिना महतापनीय ।
यैर्दुःखशत्रुरिह जन्मवतामघानि
निघ्नन्तु ते जिनवरा भवतामघानि ॥ २ ॥
यद्दोषदारुदहनेषु रतः कृशानुः
स्यादापदुर्व्यपि हि यत्स्तवतः कृशा नुः ।
यद्दृष्टिरेव परिदाहिषु मेघजालं
जैनं मतं हरतु तद्गुरु मेऽघजालं ॥ ३ ॥
यां द्रागभवन्ति सुरमन्त्रिसमा नमन्तः
संत्यज्य मोहमधियोऽप्यसमानमन्तः ।
वाग्देवतां हतकुवादिकुलाभवर्णा-
त्सा पातु कुन्दविकसन्मुकुलाभवर्णा ॥ ४ ॥

इति श्री ऋषभस्तुतिः ॥ १ ॥

## श्री अजितस्तुतिः ॥ २ ॥

कुसुमबाणचमूभिरपीडितस्त्रिभिरतीव जगद्भिरपीडितः ।
शमयताद्दुरितानि जिनाजितः सकललोकमवन्वृजिनाजितः ॥१॥
कृतवतोऽसुमतां शरणान्वयं सकलतीर्थकृतां चरणान्वयम् ।
सुरकृताम्बुजगर्भनिशान्तकान् रविसमान्
प्रणुमोऽघनिशान्तकान् ॥ २ ॥
कृतसमस्तजगच्छुभवस्तुना जितकुवादिगणास्तभवस्तुना ।
अवतु वः परिपूर्णनभारतीर्नृमरुतो ददती जिनभारती ॥ ३ ॥

सुफणरत्नसरीसृपराजितां रिपुबलमहतावपराजिताम् ।
स्मरत तां धरणाग्रिमयोषितां जिनगृहेषु यथा श्रमयोषिताम्॥४॥

## अथ श्री शंभवस्तुतिः ।

नमो भुवनशेखरं दधति देवि ते वन्दिता-
मिति स्तुतिपरागमत्रिदशपावलीवन्दिता ।
यदीयजननी प्रतिप्रणुत तं जिनेशं भवं
निहन्तु मनसः सदानुपमवैभवं शंभवम् ॥ १ ॥

सुमेरुगिरिमूर्धनि ध्वनदनेकदिव्यानके
सुरैः कृतमवेक्ष्य यं मुमुदिरेऽति भव्या न के ।
जगत्त्रितयपावनो जिनवराभिषेको मलं
सदा स विधुनोतु नोऽशुभमयं घनाकोमलम् ॥ २ ॥

अपेतनिधनं धनं बुधजनस्य शान्तापदं
प्रमाणनयसंकुलं भृशमसदृशां तापदम् ।
जना जिनवरागमं भजत तं महासंपदं
यदीप्सथ सुखात्मकं विगतकामहासं पदम् ॥ ३ ॥

शराक्षधनुशङ्खभृन्निजयशोबलक्षामता-
समस्तजगतां कृताहितमहाबलक्षामता ।
विनीतजनताविपद्विपसमृद्ध्यभिद्रोहिणी
समस्तु सुरभी स्थिता रिपुमहीध्रभिद्रोहिणी ॥ ४ ॥

इति श्री शंभवस्तुतिः ॥ ३ ॥

## अथाभिनन्दनस्तुतिः ॥ ४ ॥

अभयीकृतभीतिमज्जनः सुरपकृतातुलभूतिमज्जनः ।
इह भव्यमनोऽभिनन्दनः शिवदः सोऽस्तु जिनोऽभिनन्दनः॥१
रक्षन्त्यचरं त्रसं च ये कृतचरणाः शतपत्रसंचये ।
अपवर्गोपायशोधनास्ते वः पान्तु जिना यशोधनाः ॥ २ ॥
व्याप्ताखिलविष्टपत्रया पदचम्वा नयपुष्टपत्रया ।
या मुनिभिरभाजि नोदिता सा वागस्तु मुदे जिनोदिता ॥३॥
तन्वाब्जमहादलाभया सह शक्त्यातुलमोदलाभया ।
मम भवतु महाशिखण्डिका प्रज्ञप्ती रिपुराशिखण्डिका ॥ ४ ॥

इत्यभिनन्दनस्तुतिः ॥ ४ ॥

## अथ श्री पार्श्वजिनस्तुतिः ।

शमदमोत्तमवस्तुमहापणं सकलकेवलनिर्मलसद्गुणम् ॥
नगरजेसलमेरविभूषणं भजत पार्श्वजिनं गतदूषणम् ॥ १ ॥
सुरनरेश्वरनम्रपदाम्बुजाः स्मरमहीरुहभङ्गमतंगजाः ॥
सकलतीर्थंकराः सुखकारका इह जयन्तु जगज्जनतारकाः ॥२॥
श्रयति यः सुकृती जिनशासनं विपुलमङ्गलकेलिविभासनम् ।
प्रबलपुण्यरसोदयधारिका फलति तस्य मनोरथमालिका ॥३॥
विकटसंकटकोटिविनाशिनी जिनमताश्रितसौख्यविकाशिनी ॥
नरनरेश्वरकिंनरसेविता जयतु सा जिनशासनदेवता ॥ ४ ॥

इति श्री पार्श्वजिनस्तुतिः ।

